ननंदयम्॰ ।१॥ ॐएनावानस्य॰ द्विरि ॥ श्रीशिव॰मः॥ पाद्यंस॰मि ॥ ३ ॥ ॐत्रिपादूर्ध्व॰ अभि ॥ श्रीशिव॰ नः ॥ अर्ध्यंस॰मि॥ ४ ॥ ॐतस्माद्विराळ॰पुरः ॥ श्रीशिव॰मः ॥ आचमनीयंस॰मि ॥ ५ ॥ ॐयत्पुरुषेण॰ह्रविः ॥ श्रीशिव॰मः ॥ स्नानंस॰मि ॥ ६ ॥ सतिसम्भवेपञ्चामृतस्नानं यथा ॥ आप्यायस्वगोतमोराहुगणःसामोनिचृद्गायत्री । पयःस्नानेविनियोगः ॥ ॐआप्यायस्वसमेतुतेविश्वतःसोमवृष्ण्यं ॥भवावाजस्यसंगथे ॥ श्रीशिव॰मः ॥ पयःस्नानंस॰मि ॥ १ ॥ दधिक्राव्णोवामदेवोगोतमोदधिक्राव्णोनुष्टुप् ॥ दधिस्नानेवि॰गः ॥ ॐदधिक्राव्णोअकारिषंजिष्णोरश्वस्यवाजिनः ॥ सुरभिनोमुखाकरत्प्रणआयूंषितारिषत् ॥ श्रीशिव॰मः ॥ दधिस्नानंस॰मि ॥ २ ॥ घृतंमिमिक्ष इतिगृत्समदआग्नस्त्रिष्टुप्॥घृतस्नानेवि॰गः॥ ॐघृतंमि

टी १. आपाद्यमां दर्भ, गंध, पुष्प अने यव सहित जललेइ चडाववुं.

२. आ अर्ध्यमां पाद्यमां लख्या मुजब दर्भ वीगेरे सहीत जल लेइ चडाववुं.

३. संभव होयतो पंचामृतवडे स्नान करावत्रं ते आगळ.

मू. मिक्षेघृतमस्ययोनिर्घृतेश्रितोघृतम्वस्यधाम॥अनुष्व धमावहमादयस्वस्वाहाकृतंवृषभवक्षिहव्यम् ॥ श्रीशिव०मः। घृतस्नानंस०मि॥३॥ मधुवाताइत्यृचस्यराहुगणोविश्वेदेवागायत्री। मधुस्नानेवि०गः॥ मधुवाताऋतायतेमधुक्षरंतिसिंधवः॥ माध्वीर्नसंत्वोषधीः ॥ १ ॥ मधुनक्तमुतोषसोमधुमत्पार्थिवंरजः ॥ मधुद्यौरस्तुनः पिता॥२॥ मधुमान्नोवनस्पतिर्मधुमांअस्तुसूर्यः॥ माध्वीर्गावोभवंतुनः ॥ ३ ॥ श्रीशिव०मः॥ मधुस्नानंस०मि॥४॥ स्वादुःपवस्वेतिवेनोभार्गवः पवमानःसोमोजगती॥ शर्करास्नानेवि०गः ॥ ॐस्वादुःपवस्वदिव्यायजन्मनेस्वादुरिंद्रायसुहवीतुनाम्ने॥ स्वादुर्मित्रायवरुणाय वायवेबृहस्पतयेमधुमांअदाभ्यः॥ श्रीशिव०मः॥ शर्करास्नानंस०मि ॥ ५ ॥ आपोहिष्ठेतितिसृभिःशुद्धोदकेन प्रक्षाल्यैकादशाऽऽवृत्त्यैकाऽऽवृत्त्यावा रुद्रेण पुरुषसूक्तेन चाऽभिषेकः ॥

टी. १. आपोहिष्ठा ए (पत्र ४२ मां लख्या मुजबनी) त्रण ऋचावडे शुद्धोदके देवोनुं प्रक्षालन करी अगीयारवार अथवा एकवार रुद्रे तथा पुरुषसूक्ते करी अभिषेक करवो ते.

॥ अथ तैत्तरीयरुद्रऋष्यादयः ॥

मू. अथऋष्यादयः॥नमकानांप्रथमानुवाकेआद्यायाःकश्यपो द्वितीयायाआत्रेय स्तृतीयायाःकश्यप स्ततोद्वयोर्गौतम स्ततएकस्याःकण्व स्ततोद्वयोर्मरुत्वां स्ततएकस्याभगवाँ स्ततस्तिसृणांनारद स्ततस्तिसृणांभगवान् द्वितीयानुवाकस्यमंडूक स्तृतीयानुवाकस्यभगवाँश्चतुर्थानुवाकस्यदुर्वासाः पंचमषष्ठानुवाकयोर्भगवान् सप्तमानुवाकस्यहेमकोशो ऽष्ठमानुवाकस्यनवमानुवाके चनमोवइतियावद्भगवा नवशिष्टस्याग्नि र्दशमानुवाके प्रथमस्यपुलहो द्वितीयस्यस्कंद स्ततोद्वयोर्मांडव्य स्ततएकस्यदेराट् ततएकस्यभगवाँस्ततएकस्यात्रि स्ततएकस्यवैय्याघ्र स्ततएकस्यभगवाँ स्ततएकस्यवैराज स्ततएकस्यपुलह स्ततएकस्यनारद स्ततएकादशानुवाके आद्यानांचतुर्णांदुर्वासा स्ततआसमाप्तिर्देवल इत्यृषयः ॥ प्रथमानुवाकेआद्यस्यरुद्र स्ततएकस्यशंभु स्ततएकस्यस्कंदात्मारुद्र स्ततोद्वयोरुद्र स्ततएकस्यशंभुस्ततोद्वयोरादित्यात्मारुद्रस्ततएकस्यशंभुस्ततस्तिसृणांरुद्र स्ततस्तिसृणांभगवां स्ततोद्वितीयत्रितीयानुवाकयोरुद्र स्ततश्चतुर्थपंचमषष्ठानुवाकानांशंभुः सप्तमानु

सू. वाकस्यरुद्रोऽष्टमानुवाकस्यनमोवःकिरिकेभ्यइत्यंतस्यचनवमस्यभगवानवशिष्टस्यरुद्रो दशमानुवाकेचतुर्णांरुद्र स्ततएकस्यनंदीश्वरात्मारुद्र स्ततएकस्यभवागवां स्ततएकस्यशंभु स्ततएकस्यरुद्र स्ततएकस्यभगवां स्ततोद्वयोःशंभु स्ततोवशिष्टानांरुद्र इतिदेवताः॥ अथमानुवाकेआद्येनुष्टुभौ ततएकास्वरालनुष्टुप् ततएकानिचृदनुष्टुप् ततएकानुष्टुप् ततएकानिचृदनुष्टुप् ततएकाप्रस्तारपंक्तिः पंचपदापंक्तिर्वा ततएकाषट्पदाजगती ततःसप्तानुष्टुभ स्ततोष्टानुवाकायजूंषि ततएकाप्रस्तारपंक्तिः पंचपदापंक्तिर्वा ततएकानुष्टुप् ततश्चतस्रोजगत्य स्ततस्तिस्रस्त्रिष्टुभ स्ततएकापंचपदात्रिष्टुप् महाबृहतीवा ततोद्वादशानुष्टुभस्ततस्त्रीणियजूंषि ततस्तिस्रोनुष्टुभ स्ततएकायजुरितिछंदांसि ॥ अथचमकानांअग्निकांडऋषिः आद्याआग्नावैष्णवगायत्री शिष्टानांवाजादयोन्नादिविशेषादेवतायजुः ॥ अभिषेके विनियोगः ॥ इत्यृष्यादयः ॥

पुरुषसूक्तंयथा *॥ ॐसहस्रशीर्षापुरुषःसहस्राक्षःसहस्रपात् ॥ सभूमिंविश्वतोवृत्वात्यतिष्ठद्दशांगुलं ॥१॥

टी. १. पुरुषसूक्त आरीते. *

पुरुषएवेदंसर्वंयद्भूतंयच्चभव्यं ॥ उतामृतत्वस्येशानोय
दन्नेनातिरोहति ॥ २ ॥ एतावानस्यमहिमातोज्यायां
श्चपूरुषः ॥ पादोस्यविश्वाभूतानित्रिपादस्यामृतंदि
वि ॥ ३ ॥ त्रिपादूर्ध्वउदैत्पुरुषःपादोस्येहाभवत्पुनः ॥
ततोविष्वङ्व्यक्रामत्साशनानशनेअभि ॥ ४ ॥ तस्मा
द्विराळजायतविराजोअधिपूरुषः ॥ सजातोअत्यरिच्य
तपश्चाद्भूमिमथोपुरः ॥ ५ ॥ यत्पुरुषेणहविषादेवायज्ञ
मतन्वत ॥ वसंतोअस्यासीदाज्यंग्रीष्मइध्मःशरद्धविः
॥ ६ ॥ तंयज्ञंबर्हिषिप्रौक्षन्पुरुषंजातमग्रतः ॥ तेनदेवा
अयजंतसाध्याऋषयश्चये ॥ ७ ॥ तस्माद्यज्ञात्सर्वहुतः
संभृतंपृषदाज्यं ॥ पशून्तांश्चक्रेवायव्यानारण्यान्ग्रा
म्याश्चये ॥ ८ ॥ तस्माद्यज्ञात्सर्वहुतऋचःसामानिज
ज्ञिरे ॥ छंदांसिजज्ञिरेतस्माद्यजुस्तस्मादजायत ॥ ९ ॥
तस्मादश्वाअजायंतयेकेचोभयादतः ॥ गावोहजज्ञिरे
तस्मात्तस्माज्जाताअजावयः ॥ १० ॥ यत्पुरुषंव्यद
धुःकतिधाव्यकल्पयन् ॥ मुखंकिमस्यकौबाहूकाऊरूपा
दाउच्येते ॥ ११ ॥ ब्राह्मणोस्यमुखमासीद्बाहूराजन्यःकृ

तः ॥ ऊरूतदस्ययद्वैश्यःपद्भ्यांशूद्रोअजायत ॥ १२ ॥ चंद्रमामनसोजातश्चक्षोःसूर्योअजायत ॥ मुखादिंद्रश्चाग्निश्चप्राणाद्वायुरजायत ॥ १३ ॥ नाभ्याआसीदंतरिक्षंशीर्ष्णोद्यौःसमवर्तत ॥ पद्भ्यांभूमिर्दिशःश्रोत्रात्तथालोकाँअकल्पयन् ॥ १४ ॥ सप्तास्यासन्परिधयस्त्रिःसप्तसमिधःकृताः ॥ देवायद्यज्ञंतन्वानाअबध्नन्पुरुषंपशुं ॥ १५ ॥ यज्ञेनयज्ञमयजंतदेवास्तानिधर्माणिप्रथमान्यासन् ॥ तेहनाकंमहिमानःसचंतयत्रपूर्वेसाध्याःसंतिदेवाः ॥ १६ ॥ श्रीशिव०मः ॥ आचमनीयंस०मि ॥ ॐतंयज्ञं०श्चये॥श्रीशिव०मः ॥ वस्त्रंस०मि ॥ ७ ॥ श्रीशिव०मः ॥ आचमनीयंस०मि ॥ ॐतस्माद्यज्ञात्सर्वहुतःसंभृतं०श्चये । श्रीशिव०मः । यज्ञोपवीतंस०मि ॥ ८ ॥ श्रीशिव०मः आचमनीयंस०मि॥ ॐतस्माद्यज्ञात्सर्वहुतऋचः०यत । श्रीशिव०मः ॥ गन्धंस०मि॥ ९ ॥ ॐतस्मादश्वा०वयः॥ श्रीशिव०मः ॥ पुष्पंस०मि॥ १०॥ मूलमन्त्रेण[1] बिल्वपत्रार्पणं तुलसीसमर्पणं च ॥ * ॐयत्पुरुषंव्यदधुः०च्यते ॥ श्रीशिव ० मः । धूपंस०

टी. १. मूलमंत्रेकरी बिल्वपत्र अर्पण करवुं अने तुलसी पण अर्पण करवी ॥*

मू. मि ॥११॥ ॐब्राह्मणोस्य॰ यत ॥श्रीशिव॰मः॥दीपं स॰मि ॥ १२ ॥ ॐचंद्रमामनसो॰यत॥ श्रीशिव॰मः ॥ यथांशतोनैवेद्यंस॰मि ॥ १३ ॥ श्रीशिव॰मः ॥ आचमनीयंस॰मि ॥ मूलमंत्रेणवैदिकमंत्रेणचनीराजनं यथा ॥ * ॐनमःशिवाय ॥ ॐयेदेवासोदिव्येकादशस्थ पृथिव्यामध्येकादशस्थ॥अप्सुक्षितोमहिनैकादशस्थते देवासोयज्ञमिमंजुषध्वं ॥ श्रीशिव॰मः । नीराजनंस॰मि ॥ ॐनाभ्याआसी॰यन् ॥ श्रीशिव॰मः ॥ नमस्कारंसम॰मि॥१४॥ ॐसत्पास्यासन्॰पृ॰ ॥ श्रीशिव॰मः ॥ प्रदक्षिणांस॰मि ॥ १५ ॥ ॐयज्ञेनयज्ञ॰देवाः॥ श्रीशिव॰मः॥ पुष्पाञ्जलिंस॰मि ॥१६॥ ततोमूलमन्त्रमष्टोत्तरशतंजपेत्॥*अस्यश्रीशिवपञ्चाक्षरमन्त्रस्य वामदेवऋषिः ॥ अनुष्टुप्छन्दः ॥ श्रीशिवोदेवता ॥ जपेविनियोगः॥ॐनमःशिवाय ॥ इतिमूलमन्त्रंजप्त्वा ॥ अनेनजपेनश्रीशिवःप्रीयतां ॥अनेनपूजनेनश्रीविष्णुसूर्यविनायकशक्तिपरिवृतश्रीशिवःप्रीयतां॥ इतिपूजांजपं

टी. १. मूलमंत्रे अने वैदिकमंत्रेकरी नीराजन (आरती) करवुं ते आरीते. *

२. ते पछी मूलमंत्र एकसो आठवार १०८ जपवो. *

३. एरीते मूलमंत्र जपी " अनेन ज॰प्रीयतां । अनेन पू

चनिवेद्यदेवंप्रार्थयेत्॥तत्रमन्त्राः॥*प०॥मन्त्रहीनंक्रियाहीनंभक्तिहीनंसुरेश्वर ! ॥ यत्पूजितंमयादेवपरिपूर्णंतदस्तुमे ॥१॥आवाहनंनजानामिनजानामितवार्चनम्॥पूजांचैवनजानामिक्षम्यतांपरमेश्वर!॥ २ ॥ अन्यथाशरणंनास्तित्वमेवशरणंमम ॥ तस्मात्कारुण्यभावेनक्षमस्वपरमेश्वर!॥ ३ ॥ भूमौस्खलितपादानांभूमिरेवावलम्बनं॥ त्वयिजाताऽपराधानांत्वमेवशरणंविभो!॥ ४ ॥*इतिप्रार्थ्य॥प०॥शङ्खमध्येस्थितंतोयंभ्रामितंकेशवोपरि॥ अङ्गलग्नंमनुष्याणां ब्रह्महत्यांव्यपोहति *॥१॥ इतिदेवोपरिशङ्खोदकंभ्रामयित्वाजलंशिरसिचाभ्युक्ष्य॥प०॥ "अकालमृत्युहरणं ब्रह्महत्याविनाशनं ॥ रोगघ्नंपुण्यदंपास्येसुरपादावनेजनम् * " ॥इतिमन्त्रेणदेवतीर्थंपावेज्जलंमितिसंक्षेपः ॥ इतिदेवपूजाप्रयोगः॥

टी. जनेन०प्रीयतां " एरीते जप अने पूजा निवेदनकरी देवनी प्रार्थना करवी तेना मंत्रो *

१. एरीते प्रार्थना करी " शंखमध्ये० व्यपोहति " ए मंत्रे देवोनी उपर शंखोदकने फेरवी ते जलने माथा उपर छांटी "अकाल०जनं " एमंत्रवडे देवने नवरावेला जलनुं पांन करवुं एरीतेसंक्षेपछे.

एरीते देवपुजानो प्रयोग पुरो थयो.

सू०॥ एवंपूजाकरणाशक्तौपञ्चोपचारैर्वापूजयेत् ॥
तत्प्रयोगः ॥ आचम्यप्राणानायम्य ॥ देशकालौ सङ्कीर्त्य ॥ "श्रीशिवप्रीतयेनित्यविधिरूपांश्रीविष्णुसूर्यविनायकशक्तिपरिवृतश्रीशिवपूजांकरिष्ये" ॥ इतिसङ्कल्प्य ॥ "कलशेवरुणमावाहयामि" ॥ इत्यावाह्य॥ "ॐ वरुणायनमः ॥ गन्धपुष्पेसमर्पयामि" ॥ ततःशङ्खंसंस्नाप्य ॥ "पाञ्चजन्यायनमः ॥ गन्धपुष्पेस०मि" ॥ घण्टांसंस्नाप्य ॥"ॐजगद्ध्वनिमंत्रमातःस्वाहानमः ॥ गन्धपुष्पेस०मि" ॥ इतिघण्टांसंपूज्य ॥ शङ्खंप्रणवेनाद्भिः पूरयित्वातेनोदकेनात्मसहितंपूजासंभारंसंप्रोक्षेत् ॥ * श्रीशिवविष्णुसूर्यविनायकशक्तिभ्योनमः ॥ स्ना

---

टी. एरीते पूजाकरवा अशक्तहोय त्यारे पांच उपचारो वडे पूजन करवुं तेनो प्रयोग आरीते ॥ आचमन अने प्राणायाम करी पृष्ठ २०ना टीप्पणमां लख्यामुजब देशकालनुं कीर्त्तन (संकल्प) करी "श्रीशिव०रिष्ये"। एरीते संकल्प्य करी "कलशेव०मि"एरीते वरुणनुं आवाहन करीने"वरु०मःगंध०मि"। एमंत्रे पूजन करी तेपछी शंखने नवरावीने "पांच०मः गंध० मि"। ए मंत्रे शंखने पूजी घंटाने नवरावी "ॐजगद्ध्व०मःगंध०मि"। एरीते घंटाने पूजीने शंखनेप्रणव(ॐ)वडे जले भरी तेजलवडे पोतासहीत पूजाना साहीत्यनुं प्रोक्षण करवुं*

मू.नंसमर्पयामि॥स्नानेधूपेचदी
दिति आदौसंस्नापयेत् ॥ ❀ ᐟ
चः० यत ॥ श्रीशिव० नमः ॥ गन्धंस०मि ॥ १ ॥ उँ
तस्मादश्वा० वयः । श्रीशिव०नमः ॥ पुष्पंस० मि ॥
२ ॥ बिल्वपत्रंतुलसीदलंचार्पयेत् ॥ ❀ उँयत्पुरुषं०
च्येते ॥ श्रीशिव०नमः ॥ धूपंस०मि ॥ ३ ॥ उँब्राह्म
णोस्य०यत ॥ श्रीशिव०नमः ॥ दीपंस०मि ॥ ४ ॥
उँचंद्रमा०यत ॥ श्रीशिव०नमः ॥ यथांशतोनैवेद्यंस०
मि ॥ ५ ॥ श्रीशिव०नमः॥ आचमनीयंस०मि ॥ एवं
संपूज्य ॥ ❀ अस्यश्रीशिवपंचाक्षरमंत्रस्यवामदेवऋ
षिः ॥ अनुष्टुपूछंदः ॥ श्रीसदाशिवोदेवता ॥ जपेवि
नियोगः॥यथाशक्तिपञ्चाक्षरंजपेत्॥❀अनेनश्रीपरमेश्व
रः प्रीयतां॥प०॥मन्त्रहीनंक्रियाहीनंभक्तिहीनंसुरेश्वर!
॥ यत्पूजितंमयादेव! परिपूर्णंतदस्तुमे ॥ १ ॥ आवाह

---

टी. १. स्नान धूप अने दीपना वखतमां घंटा नाद करवो पछी नवराववा ❀

२. बिल्वपत्र अने तुलसी अर्पण करवां

३. एरीते पूजी "ॐनमःशिवाय"। एरीतनो यथा शक्ति पंचाक्षर मंत्र जपवो.

नंनजानामिनजानामितवार्चनम् ॥ पूजांचैवनजानामि क्षम्यतांपरमेश्वर ! ॥ २ अन्यथाशरणंनास्तित्वमेवशरणंमम ॥ तस्मात्कारुण्यभावेनक्षमस्वपरमेश्वर ! ॥३॥ भूमौस्खलितपादानांभूमिरेवावलम्बनम्॥त्वयिजाताऽपराधानांत्वमेवशरणंविभो ! *॥ ४ ॥ इतिपठित्वाशङ्खजलंदेवोपरिभ्रामयित्वास्वशरीरमभ्युक्ष्य॥५०॥ "अकालमृत्युहरणं ब्रह्महत्याविनाशनं ॥ रोगघ्नंपुण्यदंपास्ये सुरपादावनेजनं *॥ इतिदेवतीर्थंपात्रेणैवपीत्वाविरमेत् ॥ अथविष्ण्वादिपञ्चायतनसंक्षिप्तपूजाप्रयोगः ॥ २ ॥ तत्पूजायांविशेषः॥संकल्पे*॥श्रीविष्णुप्रीतयेनित्यविधिरूपांश्रीशिवविनायकसूर्यशक्तिपरिवृत श्रीमहाविष्णुपूजांकरिष्ये ॥ [1]उपचारार्पणे ॥ * श्रीविष्णुशिवविनायकसूर्यशक्तिभ्योनमः ॥ मन्त्रपुष्पंसमर्पयामि॥ इत्यादि

टी. १. एरीते भणी शंखना पाणीने देवोना उपर फेरवी ते वडे पोताना शरीरनुं प्रोक्षणकरी । "अकाल०जनं" एमंत्रे देवतीर्थने ( वनरावेला पाणीने) पात्रवडेज पीने वीराम पामे. ए रीते शंक्षेप देवपूजानो प्रयोग पुरो थयो.

॥ हवे विष्णु विगेरे पचायन पूजा कहेछे ॥ २ ॥

तेनीपूजामां विशेष कहेछे ॥ संकल्पमां विशेष आरीते *

१. उपचारना अर्पणमां विशेष आरीते *

मू. १ ॥ अथ सूर्यादिपञ्चायतनपूजाप्रयोगः॥ ३ ॥

एवंसूर्यादिपञ्चायतनपूजायांसङ्कल्पे ॥ * श्रीसूर्यप्रीतयेनित्यविधिरूपां श्रीशिवविनायकविष्णुशक्तिपरिवृतश्रीसूर्यपूजांकरिष्ये ॥ उपचारार्पणेतु ॥ * श्रीसूर्यशिवविनायकविष्णुशक्तिभ्योनमः ॥ मन्त्रपुष्पंसमर्पयामि । इत्यादि ॥

२ ॥ अथ शक्त्यादिपञ्चायतनपूजाप्रयोगः ॥ ४ ॥

एवंशक्त्यादिपञ्चायतनपूजायांतु संकल्पे ॥ * ॥ श्रीशक्तिप्रीतयेनित्यविधिरूपां श्रीविष्णुशिवविनायकसूर्यपरिवृतश्रीशक्तिपूजां करिष्ये ॥ उपचारार्पणेतु * ॥ श्रीशक्तिविष्णुशिवविनायकसूर्येभ्योनमः । मन्त्र पुष्पं स०मि ॥ इत्यादि ॥

---

टी. १ हवे सूर्यादिपंचायतनपूजानोप्रयोग कहेछे ॥३॥

एरीते सूर्यवीगेरे पंचायतननीपूजाना संकल्पमां विशेषआरीते *

२. उपचारना अर्पणमां विशेषआरीते *

२ हवेशक्त्यादिपंचायतन पूजानो प्रयोग कहेछे ॥ ४ ॥

एरीते शक्ति वीगेरे पंचायतननी पूजामांना संकल्पमां *

५. उपचारना अर्पणमां विशेष आरीते *

मू.॥ अथ विनायकादिपञ्चायतनपूजाप्रयोगः ॥ ५ ॥ एवंविनायकादिपञ्चायतन पूजायां सङ्कल्पे॥ ॥ श्रीविनायकप्रीतयेनित्यविधिरूपां श्रीविष्णुशिवसूर्यशक्तिपरिवृतश्रीविनायकपूजांकरिष्ये॥ उपचारार्पणेतु॥ श्रीविनायकविष्णुशिवसूर्यशक्तिभ्योनमः । मन्त्रपुष्पं स० मि ॥ इत्यादि ॥ पूजान्तेजपमन्त्रास्तुतत्तद्देवप्रकाशकाः ॥ ते यथा ॥ ॐनमोनारायणाय ॥ इतिविष्णुमंत्रः ॥ २ ॥ ॐह्रां ह्रीं सः । इतिसूर्यस्य ॥ ३ ॥ ॐ ऐंह्रींक्लींचामुंडायैविच्चे । इतिशक्तेः ॥ ४ ॥ ॐ वक्रतुण्डायहुं ॥ इतिविनायकस्य ॥ ५ ॥ इतिविशेषः॥

१ हवेविनायकादिपंचायतनपूजानोप्रयोगकहेछे ॥ ५॥

टी. ए रीते विनायक वीगेरे पंचायतनना पूजामांना संकल्पमां विशेष आरीते

२. उपचारोना अर्पणमां विशेषआरीते

३. पूजानी समाप्तिमां जपना मंत्रोतो तेते देवना प्रकाशकोछे ते आ रीते

४. ए रीते विष्णुनो मंत्र ॥ २ ॥

५. ए रीते सुर्यनो मंत्र ॥ ३ ॥

६. ए रीते शक्तिनो मंत्र ॥ ४ ॥

७. ए रीते विनायकनो मंत्र॥५॥"एरीते विशेषछे."बाकी

मू.शेषमुक्तप्रयोगवत् ॥ इति विष्ण्वादिपञ्चायतनपूजायां विशेषः ॥

॥ अथकेवलशिवपूजनेच्छुंप्रतिशिवपूजाप्रयोगः ॥

तत्रकर्त्ताधृतभस्मत्रिपुंड्रुद्राक्षः शिवायतनंगत्वाक्षालितपादः स्वाचान्तउदङ्मुखोदेशकालौसङ्कीर्त्त्य श्रीशिवप्रीत्यर्थं श्रीशिवपूजांकरिष्ये ॥ इति सङ्कल्पः ॥ अस्यश्री शिवपञ्चाक्षरमन्त्रस्यवामदेवऋषिः॥अनुष्टुप् छन्दः ॥ श्रीसदाशिवोदेवता॥न्यासे पूजने जपेचविनियोगः ॥ वामदेवऋषयेनमः शिरसि १ । अनुष्टुप्छन्दसेनमोमुखे । श्रीसदाशिवदेवतायैनमोहृदि ।ॐनंतत्पुरुषायनमो हृदये ॥ १ ॥ ॐमंअघोराय नमः पादयोः ॥ २ ॥ ॐशिंसद्योजातायनमो गुह्ये ॥ ३ ॥ ॐवांवाम

टी.—कहेला प्रयोग प्रमाणे समजवुं.

एरीते विष्णु विगेरे पंचायतननी पुजामां वीशेषछे ॥ ॥ हवे एकला शिवना पुजननी इच्छावाला प्रत्ये शिव पुजानो प्रयोग कहीये छीये ॥ तेमां पुजा करवावालो भस्म त्रिपुंड्र अने रुद्राक्ष धारण करेलो तेमज पग धोएलो अने आचमन करेलो शिवना मंदिरमां जइने उत्तर सामा मुखे बेशी पत्र २० ना टीपणमां लख्या प्रमाणे देशकालनुं कीर्तन (संकल्प) करी "श्रीशिव०करिष्ये" ए रीते संकल्प करे

मू. देवायनमोमूर्ध्नि ॥४॥ ॐयंईशानायनमो मुखे ॥५॥ ॐउं हृदयायनमः ॥ १ ॥ ॐनंशिरसेस्वाहा ॥ २ ॥ ॐमंशिखायैवषट् ॥३॥ ॐशिंकवचायहुं ॥४॥ ॐवांनेत्रत्रयायवौषट् ॥ ५ ॥ ॐयंअस्त्रायफट् ॥ ६ ॥ कुंभपूजांविधाय ध्यायेत् ॥ ध्यायेन्नित्यंमहेशंरजतगिरिनिभंचारुचन्द्रावतंसंरत्नाकल्पोज्ज्वलाङ्गंपरशुमृगवराऽभीतिहस्तंप्रसन्नम्॥ पद्मासीनं समन्तात्स्तुतममरगणैर्व्याघ्रकृत्तिंवसानं विश्वाद्यं विश्ववन्द्यं निखिलभयहरं पञ्चवक्त्रंत्रिनेत्रं ॥१॥ इतिध्यात्वा प्राणप्रतिष्ठांकृत्वा स्थाप्यलिङ्गं स्पर्शन्नावाहनं कुर्यात् ॥ ॥ ॐभूः पुरुषंसाम्बसदाशिवमावाहयामि ॥ ॐभुवः पुरुषंसाम्ब०यामि ॥ ॐस्वः पुरुषंसाम्ब०यामि ॥ ॐभूर्भुवः स्वः पुरुषंसाम्ब० यामि ॥ इत्यावाह्य ॥ " स्वामिन्सर्वजगन्नाथ ! यावत्पूजावसानकम् ॥ तावत्त्वंप्रीतिभावेनलिङ्गेऽस्मिन्सन्निधो

टी. १, पत्र ८७ मां लख्या मुजब कुंभ पूजा करी ध्यान करवुं.

२. ए रीते ध्यान करी प्राणप्रतिष्ठा * करीने पासेना लिंगने स्पर्श करतां आवाहन करवुं

३. एरीते आवाहन करी "स्वामिन्सर्वजगन्ना०सन्निधोभ

* कदि आ अप्रोग प्राण प्रतिष्ठा करवानी हायतो आगळ पार्थिव पूजामां लखेलोछे मां जोवी.

भव"॥ इति पुष्पाञ्जलिंदद्यात्॥ स्थावरलिङ्गपूर्वसंस्कृत चरलिङ्गेच प्राणप्रतिष्ठाद्यावाहनान्तं न कार्यम् * ॥ ॐसद्योजातंप्रपद्यामिसद्योजातायवैनमोनमः ॥ ॐनमः शिवायश्रीसाम्बसदाशिवायनमः ॥ आसनंसमर्पयामि ॥ स्त्रीशूद्रौचेत् ॥ ॐनमःशिवायेति पञ्चाक्षरीस्थाने॥ श्रीशिवायनमः ॥ इतिनमोन्तमन्त्रेणपूजयेत् ॥ * ॥ ॐ भवेभवेनातिभवेभवस्वमां ॥ ॐनमःशि०नमः ॥ पाद्यं स०मि ॥ ॐभवोद्भवायनमः ॥ ॐनमःशि०नमः ॥ अर्घ्यं स०मि ॥ ॐवामदेवायनमः ॥ ॐनमःशि०नमः ॥ आ चमनीयंस०मि ॥ ॐज्येष्ठायनमः ॥ ॐनमःशि०नमः । स्नानंस०मि ॥ ततोमूलमन्त्रेणाप्ययस्वेत्यादिभिः पञ्चामृतैः संस्नाप्यआपोहिष्ठेतितिसृभिः शुद्धो-

---

टी. व" एरीतेना मंत्रे पुष्पांजलि आपवी ॥ स्थापेला अने प्रथम संस्कार करेला चर (चलित) लिंगमां प्राणप्रतिष्ठाथी आवाहन सुधी नकरवुं *

१. स्त्री अने शूद्र होयतो तेणे ॥ ॐनमःशिवाय ॥ पंचाक्षरी मंत्रने ठेकाणे ॥ श्रीशिवायनमः॥ ए रीते "नमः"॥ अंते आवे ते रीतना मंत्रे करी पूजा करवी *

२. ते पछी मूलमंत्रे अने आप्यायस्व इत्यादि पत्र ९१ मां लखेला मंत्रोए पंचामृतवडे नवरावी आपो हिष्ठा एरीते पत्र ४२मांनी त्रण ऋचाये शुद्धोदके प्रक्षालनकरी आगीयार

शाल्यैकादशावृत्यैकावृत्यावारुद्रेणपुरुषसूक्तेनच चन्द नकुङ्कुमकर्पूरवासितजलेनाभिषेकं कुर्यात् ॥ ॐनमःशि० नमः। आचमनीयंस०मि ॥ इत्याचमनंदत्वा ॥ साक्षतजलेनतर्पणंकार्यं ॥ ॥ ॐभवंदेवंतर्पयामि ॥ १ ॥ ॐशर्वंदेवंत०मि ॥ २ ॥ ॐईशानंदेवंत०मि ॥ ३ ॥ ॐपशुपतिंदेवंत०मि ॥ ४ ॥ ॐउग्रंदेवंत०मि ॥ ५ ॥ ॐरुद्रंदेवंत०मि ॥ ६ ॥ ॐभीमंदेवंत०मि ॥ ७ ॥ ॐमहान्तंदेवंत०मि ॥ ८ ॥ ॐभवस्यदेवस्यपत्नींत०मि ॥ १ ॥ ॐ शर्वस्यदेवस्यपत्नींत०मि ॥ २ ॥ ॐईशानस्यदेवस्यप०मि ॥ ३ ॥ ॐपशुपतेर्देवस्यप०मि ॥ ४ ॥ ॐउग्रस्यदेवस्यप०मि ॥ ५ ॥ ॐरुद्रस्यदेवस्यप०मि ॥ ६ ॥ ॐभीमस्यदेवस्यप०मि ॥ ७ ॥ ॐमहतोदेवस्यप० मि ॥ ८ ॥ ॐ श्रेष्ठायनमः ॥ ॐनमःशि०नमः ॥ वस्त्रंस०मि ॥ ॐनमःशि०नमः। आचमनीयंस०मि ॥ ॐरुद्रायनमः ॥ ॥ ॐनमःशि०नमः । यज्ञोपवीतंस०मि ॥ ॐनमःशि० मः ॥ आचमनीयंस०मि ॥ ॐकालायनमः ॥ ॐ

आवर्त्तने अथवा एक आवर्त्तने रुद्र अने पुरुषसूक्ते चंदन केसर अने कर्पूरना सुगंधवाला जलवडे अभिषेक करवो ॥

१, एरीते आचम आपी यव अथवा साळ वडे मिश्रित जले देवउपर तर्पण करवुं ते

मू. नमः शि० नमः। चन्दनंस० मि ॥ ॐकलविकरणायनमः। ॐनमःशि०नमः अक्षतान्स०मि ॥ ॐ विकरणायनमः ॥ ॐनमःशिवाय०नमः। पुष्पाणिस० मि॥सहस्रमष्टोत्तरशतंवासहस्रादिनामभिर्मूलमन्त्रेणवा बिल्वपत्राणिदद्यात् ॥ * ॥ ॐबलायनमः। ॐनमःशिवाय०नमः। धूपंस०मि ॥ ॐबलप्रमथनायनमः ॥ ॐनमःशि०नमः दीपंस०मि ॥ ॐसर्वभूतदमनायनमः । ॐनमःशि०नमः ॥ नैवेद्यंस०मि॥ॐनमःशि०नमः। आचमनीयंस०मि ॥ ॐनमःशि०नमः । फलं स०मि ॥ ॐमनोन्मनायनमः ॥ ॐनमःशि०नमः । तांबूलंस०मि। मूलेन वैदिकैर्मन्त्रैश्च नीराजनं * ॐईशानः सर्वविद्यानामीश्वरः सर्वभूतानांब्रह्माधिपतिर्ब्रह्मणोधि शिवो मेअस्तुसदाशिवोम्॥ॐनमःशिवाय०नमः। मन्त्रपुष्पंस०मि ॥ ॐभवायदेवायनमः ॥ १ ॥ ॐशर्वायदेवायनमः ॥ २ ॥ ॐईशानायदेवायनमः ॥ ३ ॥ ॐपशुपतयेदेवायनमः ॥ ४ ॥ ॐउग्रायदेवायनमः ॥ ५ ॥ ॐरु

टी. १. हजार १००० अथवा १०८ बिलीपत्रोसहस्र अथवा अष्टोत्तर शतनामे अथवा मूलमन्त्रे चडाववां *
२. मूलमंत्र अने पत्र ९७ माना वैदिक मंत्रोये नीराजन (आरति) करवुं *

द्रायदेवायनमः ॥ ६ ॥ ॐभीमायदेवायनमः ॥ ७ ॥ ॐ महतेदेवायनमः ॥ ८ ॥ ॐभवस्यदेवस्यपत्न्यैनमः ॥१॥ ॐशर्वस्यदेवस्यपत्न्यैनमः ॥ २ ॥ ॐईशानस्यदेवस्यपत्न्यैनमः ॥ ३ ॥ ॐपशुपतेर्देवस्यपत्न्यैनमः ॥ ४ ॥ ॐ उग्रस्यदेवस्यपत्न्यैनमः ॥ ५ ॥ ॐरुद्रस्यदेवस्यपत्न्यैनमः ॥ ६ ॥ ॐभीमस्यदेवस्यपत्न्यैनमः ॥७॥ ॐमहतोदेवस्यपत्न्यैनमः ॥ ८ ॥ इतिषोडशनमस्कारान्कृत्वा द्वादशपुष्पाञ्जलीन्दद्यात् ॥ * ॥ॐशिवायनमः । १॥ ॐरुद्रायनमः । २ ॥ ॐपशुपतयेनमः ॥ ३ ॥ ॐनीलकण्ठायनमः ॥ ४ ॥ ॐमहे[illegible]यनमः ॥ ५ ॥ ॐहरिकेशायनमः ॥ ६ ॥ ॐविरूपाक्षायनमः ॥ ७ ॥ ॐपिनाकिनेनमः ॥ ८ ॥ ॐत्रिपुरान्तकायनमः ॥९ ॥ ॐशम्भवेनमः ॥ १० ॥ ॐशूलिनेनमः ॥ ११ ॥ ॐमहादेवायनमः ॥ १२ ॥ ॐनमः शि०नमः । प्रदक्षिणांस०मि॥ ॐनमःशि०नमः ॥ नमस्कारान्स०मि ॥ ततोमूलमंत्रमष्टोत्तरशतंजप्त्वा "अनेनजपेनश्रीशिवःप्रीयतां" ॥ इतिजपंनिवेद्य ॥ प० ॥ "मन्त्रहीनंक्रियाहीनंभक्तिहीनंसु

टी. १. एरीते सोल नमस्कार करी बार पुष्पांजलि अर्पण करवी . २. मूलमंत्र ( ॐनमःशिवाय ). एकसोआठवार जपीने " अनेनज०यतां ." एरीते जप निवेदन करी " मंत्रहीनं०

मू. रेश्वर! ॥यत्पूजितंमयादेवपरिपुर्णंतदस्तुमे * ॥ इतिक्षमापयित्वा ॥ अनेनपूजनेनश्रीसाम्बसदाशिवः प्रीयतां ॥ इतिनिवेदयेत् ॥ इतिशिवपूजाप्रयोगः ॥

॥ अथ पार्थिवपूजाविधिः ॥

अथलिङ्गलक्षणमुक्तंसूतसंहितायाम् ॥ प० ॥ नर्मदाजलमध्यस्थंबाणलिङ्गमितिस्थितं ॥ बाणासुरार्चितंलिङ्गंबाणलिङ्गंतदुच्यते ॥ तत्रापि ॥ त्रिपञ्चवारंयस्यैवतुलासाम्यंनजायते ॥ तदाबाणंसमाख्यातं शेषंपाषाणसंमितं ॥ शेषंनार्मदमुच्यते। इतिपाठान्तरं॥ नद्यांवाप्रक्षिपेद्भूयोयदातदुपलभ्यते । बाणलिङ्गंतदाविद्धि सर्वलिङ्गोत्तमोत्तमम्

टी. स्तुमे "एसमंत्रेक्षमापन करी" अनेन पूज०यतां " एरीते पूजा निवेदन करवी ॥ ए रीते शिव पूजानो प्रयोग पुरो थयो ॥

॥ हवे पार्थिवपूजानो विधि केहेछे ॥

हवे लिंगनुलक्षण सूतसंहितामां कहेलुछे, के नर्मादाना जलनी मध्यमां रहेलुबाण लिंग केहेछे. अने बाणासुरे अर्चन करेलुंलिंग बाणलिंग केहेवायछे, तेहेमां पण जे बाण त्रण अथवा पांचवार तोलतां तेना तोलनी समता नथाय ते बाणलिंग, अने बाकी पाषाण केहेवाय एम केटलाक केहेछे, ने केटला नर्मदाजलनुं बाण लिंगथाय एमपण केहेछे, अथवा जेने वारंवार नदीमां ज्यारे नाखे ने तेनुते प्राप्त थाय त्यारे

*॥इतिवाक्यात्तादृशबाणलिङ्गस्यदुष्प्राप्यत्वात्॥ प०॥
कृतेमणिमयंलिङ्गं त्रेतायांहेमसंभवं । द्वापरे पारदंश्रेष्ठं
पार्थिवंतुकलौयुगे ॥ सर्ववर्णाश्रमाणांतुकलौपार्थिवमेव
हि*॥इतिलिङ्गात्कलौपार्थिवपूजाश्रेष्ठातस्मात्सोच्यते॥

॥ पूजाप्रयोगः ॥

अथ सद्योजातादिपञ्चब्रह्ममन्त्रैर्बौधायनोक्तप्रकारेण
पार्थिवपूजाप्रयोगः ॥ तत्रादौकृताऽऽवश्यकक्रियःस्ना

---

ते सर्वलिंगोमांश्रेष्ठमां श्रेष्ठ बाण लिंग समजवुं. एवाक्य थ
की ते बाण लिंगनुं दुःप्राप्य पणुंछे माटे सत्ययुगमां मणिथी
बनावेलुं, त्रेतायुगमां सोनाथी बनावेलुं, द्वापरयुगमां पाराथी
बनावेलुं अने कलियुगमां पार्थिव (माटीनुं) लिंग श्रेष्ठ सम
जवुं. माटे सर्व वर्ण (ब्राह्मण, क्षत्रिय, वैश्य, अने शूद्र) अने
सर्व आश्रमो (ब्रह्मचारी, ग्रहस्थ, वानप्रस्थ, अने संन्यस्त)
ने तो कलियुगमां पार्थिव लिंगनुं श्रेष्ठपणुंछे एम लिंगपुराण
मां वाक्यछे माटे कलियुगमां पार्थिव पूजा श्रेष्ठछे माटे ते क
हीये छीये.

॥ हवेपूजानो प्रयोग कहेछे ॥

हवे सद्योजातादि पांच ब्रह्म (वेद) मंत्रो वडे बौधायने
कहेली पार्थिव पूजानो प्रयोग कहीये छीये.
तेमां पेहेलां अवश्यक क्रिया करेलो अने स्नांन विगेरेथी

नादिनाशुचिर्भूत्वाधृतात्रिपुण्ड्ररुद्राक्षमालःकृतसन्ध्याव
न्दनादिनित्यक्रियःप्रयतोब्रह्मचारी
शंगत्वाशुचौदेशेपाषाणकीटकेशास्थिवालुकादिदोषर
हितांमृदंदृष्ट्वातत्र॥'भूम्यैनमः'॥सकलपूजार्थेगन्धाक्षतपु
ष्पाणि समर्पयामि'॥इतिभूमिंसंपूज्य॥'भूम्यैनमः'।
नत्वाईशानकोणगतांमृदंशस्त्रेणोत्कीर्याष्टांङ्गुलांमृदमपा
कृष्य॥प०॥उद्धतासिवराहेणकृष्णेनशतबाहुना।
त्वांच गृह्णामिप्रजयाचधनेनच॥इतिमन्त्रेणशुद्धान्तर्मृद
मादायशूद्रादिस्पर्शरहितोमौनीगृहमागत्यशुचि स्थले
तांस्थापयेत्॥कृताचमनोचैलाजिनकुशोत्तरेह्यासनेउद

---

पवित्रथइ. भस्मत्रिपुंड् अने रुद्राक्षनु धारण करी तेमज
वंदनादि नित्यक्रिया करी इंद्रीयो नियम राखी ब्रह्मचारीव्रत रा
खी अने श्वेत वस्त्र पेहेरी उत्तर दिशा तरफ जइ पवित्र ज
ग्योमां पथर, जीवात, वाळ, हाडकां, अने रेती विगेरेथी दोष
रहित माटी जोइने ते जग्योये " भूम्यैनमः। सकल०गंधा०
मि" ए मंत्रे भूमिनुं पूजनकरी 'भूम्यैनमः' एमंत्रे पृथ्वीने न
मी ईशान खुणामांना भागनी माटी शस्त्र (कोशाविगेरे) वडे
खोदी आठ आगल उंडाइसुधीनी माटीने काहाडी नाखी
" उद्धृता०धनेनच " ॥एमंत्रे शुद्ध अंदरनी माटी लेइ रस्ता
मां शूद्र वीगेरेनो स्पर्श न थाय तेम वगरबोले घेर आवी प
वित्रजग्योमां ते माटीने मुकवी. पछी आचमन करी प्रथम दर्भो

मू.म्नुखउपविशेत्॥ततः॥"पृथ्विव्त्वयाधृतालोकादेवि! त्वं विष्णुनाधृता॥त्वंचधारयमांदेवि! पवित्रींकुरुचासनं"॥इतिभूमिंसंप्राथ्र्य। अपसर्पन्तुयेभूतायेभूताभुविसंस्थिताः॥ येभूताविघ्नकर्त्तारस्तेनश्यन्तुशिवाज्ञया ॥ इतिपठित्वा गौरसर्षपान्चतुर्दिक्षुविकिरेत् ॥ देकालौसङ्कीर्त्त्य ॥ श्रीशिवप्रीतयेपार्थिवलिङ्गपूजनं करिष्ये ॥ इतिसङ्कल्प्य ॥ ॐसद्योजातंप्रपद्यामिसद्यो जातायवैनमो नमः॥ भवेभवेनातिभवेभवस्वमां भवोद्भवायनमः ॥ इति मन्त्रेणमृदश्चूर्णं कुर्यात् ॥ 'ॐवामदेवायनमो ज्येष्ठाय नमः श्रेष्ठायनमो रुद्रायनमः कालायनमः कलविकरणायनमोबलविकरणायनमो बलायनमो बलप्रमथनाय नमः सर्वभूतदमनाय नमोमनो न्मनायनमः'॥ इतिजल

---

टो. पाथरी ते उपर अजिन (मृगचर्म) अने ते उपर वस्त्र ए रीतना आसन उपर उत्तर दिशा सामु बेसवुं. ॥ पछी " पृथ्वित्वया०चासनं " ए मंत्रे भूमिनी प्रार्थना करी " अपसर्पन्तु०शिवाज्ञया " ए मंत्र भणी धोला सर्षव चारेदिशामां वेरवा. ॥ ते पछी पत्र ८५वा२० ना टीप्पणमां लख्या मुजब देशकालनुं कीर्त्तन (संकल्प) करी"श्रीशिवप्री०करिष्ये" ए रीते संकल्पकरी " ॐसद्योजातं०यनमः " एमंत्रेमाटीनुं चुरण ( भूको )करवो " ॐ वामदेवाय०न्मनायनमः " ए मंत्रे

सेचनं ॥'अघोरेभ्योथघोरेभ्यो घोरघोर तरेभ्यः। सर्वे भ्यः सर्व शर्वेभ्यो नमस्ते अस्तुरुद्ररूपेभ्यः'॥ इतिसंयोजनम्॥ ॐतत्पुरुषाय विद्महे महादेवाय धीमहि। तन्नोरुद्रःप्रचोदयात्'॥इतिपिण्डीकरणम्॥ॐईशानःसर्वविद्यानामीश्वरः सर्वभूतानांब्रह्माधिपतिर्ब्रह्मणोधिपतिर्ब्रह्माशिवोमेअस्तुसदाशिवोम् ॥ इतिमन्त्रेणयथोक्तमेखलमखण्डंलिङ्गंविधाय ।'सद्यःसमस्ताघनाशन' ॥इतिशिरसाभिनम्यपूतेवामपाणौवेदिकायांताम्रपात्रेवाबिल्वपत्रंनिधायतदुपरिसाक्षतपुष्पंलिङ्गं संस्थाप्य प्राण प्रतिष्ठां कुर्यात् ॥ अथप्राणप्रतिष्ठा ॥अस्यप्रा

---

टी. तेमां जल रेडवुं. " ॐअघोरेभ्यो०रूपेभ्यः" ए मंत्रे जल अने माटी एकठुं करवुं. " ॐतत्पुरुषाय० प्रचोदयात् " ए मंत्रे तेनो पीडो करवो. " ॐईशानः०शिवोम् " ए मंत्रे कह्या मुजबनी मेखला ( जलाधारी ) नु अखंडित लिंगबनावीने. " ॐसद्यः०नाशन " ए मंत्रे मुस्तकवडे तेने नमस्कार करी पवित्र डावा हाथमां अथवा वेदिका ( चोखंडुंस्थंडिल ) उपर अथवा त्रांबाना पात्रमां बिल्वपत्र मुकी ते उपर अक्षत ( यव ने तेना अभावे चोखा ) अने पुष्प सहित लिंगनु स्थापन करी तेज प्रमाणे जमणा हाथनी अनामिका ( त्रीजी आंगली) नो स्पर्श करी प्राण प्रतिष्ठा करवी ते नीचे मुजब.

सू. णप्रतिष्ठामन्त्रस्यब्रह्मविष्णुरुद्राऋषयः ऋग्यजुः
सामानिच्छन्दांसि।प्राणाख्या देवता ॥ आंबीजं॥ह्रींश
क्तिः । क्रौंकीलकं । पार्थिवलिङ्गप्राणप्रतिष्ठापनेवि
नियोगः॥ ॐआंह्रींक्रौंयंरंलंवंशंषंसंहंसः।शिवस्यप्राणाः
॥ जीवः । शिवस्यसर्वेन्द्रियाणि इहागत्यसुखंचिरंति
ष्ठन्तुस्वाहा।शिवेहागच्छेहतिष्ठ । इतिप्राणप्रतिष्ठांकृत्वा
सहपुष्पोदकेनलिङ्गेदेवमावाहयेत् ॥ ॐभूःपुरुषमावाह
याम्योंभुवःपुरुषमावाहयाम्यों सुवःपुरुषमावाहयम्यों
भूर्भुवःसुवःपुरुषमावाहयाम्यायातुभगवान्महादेवइत्या
वाहयेत् ॥प०॥स्वामिन्सर्वजगन्नाथयावत्पूजावसानकम्
तावत्त्वंप्रीतिभोवनलिङ्गेस्मिन्सन्निधोभव॥इतिसंप्रार्थ्य
। स्वस्यवामभागेजलपूर्णकलशंस्थापयेत् ॥ सर्वोपचा
रान्दक्षिणभागेच ॥ ॐआपोवाइद॰ सर्वंविश्वाभूता
न्यापःप्राणावाआपः पशवआपोन्नमापोमृतमापः स
म्राडापोविराडापश्छंदा॰स्यापोज्योती॰ष्यापोयजू

---

टी. १. एरीते प्राण प्रतिष्ठाकरी पुष्पसहित जलवडे लिंगमां दे
वनुं " ॐभूःपुरुष०महादेवः " ए मंत्रे आवाहनकरी " स्वा
मिन्सर्व०भव " ए मंत्रे तेनी प्रार्थनाकरी पोताना डाबा भाग
मां जलेभरेलो कलश अने जमणी तरफ सर्व पूजासामग्री
मुकीने. " ॐआपोवा०ओम् " ए मंत्रे जलकलशनुं अभि

ऽप्याप:सर्वादेवताआपाभूर्भुव:सुवरायओम् ॥ इत्य भिमन्त्र्यगन्धाक्षतै:संपूज्य।कलशस्यमुखेविष्णु:कण्ठेरु द्र:समाश्रित:।मूलेतत्रास्थितोब्रह्मामध्येमातृगणा:स्मृ ता:॥ कुक्षौतुसागरा:सप्तसप्तद्वीपावसुन्धरा॥ऋग्वेदोऽ थयजुर्वेद:सामवेदोह्यथर्वण: ॥ अङ्गैस्तुसहिता:सर्वे कल शंतुसमाश्रिता:॥आयान्तुशिवपूजार्थंदुरितक्षयकारका: ॥ इतिकलशेसर्वतीर्थान्यावाह्य ॥ ततस्तद्गतैर्जलै:। ॐत त्पुरुषायविद्महेमहादेवायधीमहि। तन्नोरुद्र:प्रचोदयात् ॥ इतिरुद्रगायत्र्यास्वशरीरंपुजासंभारांश्चसंप्रोक्ष्यध्याये त्॥ * ध्यायेन्नित्यंमहेशंरजतगिरिनिभंचारुचन्द्रावतंसंर त्नाकल्पोज्वलाङ्गंपरशुमृगवराऽभीतिहस्तंप्रसन्नम् ॥ पद्मासीनंसमंतात्स्तुतममरगणैर्व्याघ्रकृत्तिं वसानंवि श्वाद्यंविश्ववन्द्यंनिखिलभयहरंपंचवक्त्रंत्रिनेत्रम्॥१। उ त्सङ्गनिषण्णकुञ्जरमुखं प्रेम्णा करेणस्पृशन्वामोरु स्थितवल्लभाङ्कललित:स्कन्दंकरेणस्पृशन्।इष्टाभीतिम नोहरंकरयुगंबिभ्रत्प्रसन्नाननोभूयान्न:शरदिन्दु

---

टी. मंत्रणकरी गंधाक्षत वडे पूजनकरी "कलशस्य०कारका:" ए मंत्रोए कलशमां तीर्थोनु आवाहन करी पछी ते कलशमा ना जलवडे "ॐतत्पुरुषाय०प्रचोदयात्" ए रुद्रगायत्रीवडेपो ताना शरीरनुं अने पूजासाहीत्यनुं प्रोक्षणकरी ध्यान करवुं.*

नुःश्रेयस्करःशङ्करः ॥ २ ॥ एवमात्मानंरुद्ररूपंध्यात्वा । ॐनमःशिवायश्रीमहादेवायमानसिकंचन्दनंकल्पयामि ॥१॥ ॐनमःशि० य मानसिकंपुष्पंकल्पयामि ॥ २ ॥ ॐनमःशि० य मानसिकंधूपंकल्पयामि ॥ ३ ॥ ॐनमःशि० य मानसिकंदीपंकल्पयामि ॥ ४ ॥ ॐनमःशि० य मानसिकंनैवेद्यंकल्पयामि ॥ ५ ॥ इत्यभ्यर्च्य । वामनासापुटाऽध्वनामनश्चिन्तितंशिवंपुष्पप्रक्षेपेणलिङ्गेआगतंविभाव्यपूजयेत् ॥ * ॐसद्योजातंप्रपद्यामिसद्योजातायवैनमोनमः । ॐनमः शिवाय श्रीसाम्बसदाशिवायनमः । आसनंसमर्पयामि ॥ इतिपुष्पाद्यासनंदेयं * ॥ ॐयोरुद्रोअग्नौयोअप्सुयओषधीषुयोरुद्रोविश्वाभुवनाविवेशतस्मैरुद्रायनमोअस्तु ॥ इतियजुषापाद्यपात्रमभि

---

टी.१. ए प्रमाणे रुद्ररूप आत्मानुं ध्यांन करी. " ॐनमः शिवाय श्री० चंदनं कल्पयामि ॥ १ ॥ ए रीते मानसिक. पुष्प २ धूप ३ दीपं ४ अने नैवेद्य वडे अर्चन करी. डाबी तरफना नाकना पुट ( छिद्र ) ना मारग वडे मने चिंतवेला शिवने पुष्पना प्रक्षेपवडे लिंगमां आव्याएम भावना करी पूजन करवुं. *

२. ए मंत्रे पुष्प विगेरेनुं आसन अर्पण करवुं. *

३. ए रीतनी यजुषा (छंद वगरनीऋचा) वडे पाद्यपात्रनुं

मन्त्र्यप्रक्षाल्यतिरःपवित्रमपआनीयपुनस्तेनैवापोभि
न्त्र्यसहपवित्रेणादित्यंदर्शयित्वार्पयेत् * । उँभुवेभवेनातिभवेभवस्वमां ॥ उँनमःशि ० मः । पाद्यंसमर्पयामि ॥ पुनः ॥ योरुद्रो ० स्तु ॥ इतियजुषाऽर्घ्यपात्रमभिमन्त्र्य प्रक्षाल्यतिरः पवित्रमपआनीयपुनस्तेनैवापोभिमन्त्र्य सहपवित्रेणादित्यंदर्शयित्वार्पयेत् * ॥ उँभवोद्भवायनमः ॥ उँनमःशि ० मः ॥ अर्घ्यंसमर्पयामि ॥ पुनस्तथैवाचमनपात्रमादित्यंदर्शयित्वार्पयेत् * ॥ उँवामदेवायनमः ॥ उँनमःशि ० मः। आचमनंस ० मि ॥ उँज्येष्ठायनमः । उँनमःशि ० मः । मधुपर्कंस ० ॥ ततःपञ्चामृतस्नानं ॥ ततः । उँआपोहिष्ठा ० से ॥ १ ॥ योवःशि ० रः ॥ २ ॥ तस्मा

---

अभिमंत्रण करी ते पात्रनुं प्रक्षालन करी आडा एटले पूर्वमां अग्ररहे तेम पवित्रां (दर्भनो मध्य भाग वर्जित पडखाना दर्भना दस आंगलना बे कटका) उपरमुकी तेमां जलरेडी फरीते (ॐयोरुद्रो ० अस्तु) ए मंत्रे जलनुं अभिमंत्रण करी पवित्राये सहित पाद्यपात्र सूर्यने बतावी ते पाद्य अर्पण करवुं. *

१. उपरना पाद्यपात्र मुजब अर्घ्य तैयार करी अर्पण करवुं. *

२. फरी पाद्य मुजवज आचमनीय पात्र तैयार करी आचमन अर्पण करवुं. *

३. ते पछी पत्र ९१ मां लख्या मुजब पंचामृत वडे स्नान

अ॑र॑०नः ।इतितिसृभिः ॥।ॐनमःशि०मः ॥ शुद्धोदक स्नानंस० ॥ ॐनमः०मः आचमनीयंस०मि ॥ ततः साङ्गेनशतरुद्रीयेणाभिषेकंकुर्यात् ॥ ततः ॥ ॐभूर्भुवः स्वः ॥ इतिव्याहृतिभिःप्रदक्षिणमुदकंपरिषिच्यपवित्रंपादमूले निधायाद्भिस्तर्पयेत् ॥ ॐभवंदेवंतपर्यामि ॥ १ ॥ ॐशर्वंदेवंत० ॥ २ ॥ ॐईशानंदेवंत ० ॥ ३ ॥ ॐपशुपतिंदेवंत० ॥ ४ ॥ ॐरुद्रंदेवंत० ॥ ॐउग्रंदेवंत० ॥ ६ ॥ ॐभीमंदेवंत० ॥ ७ ॥ ॐमहान्तंदेवंत० ॥८॥ इत्यष्टभिर्मन्त्रैस्तर्पणंकुर्यात् ॥ ॐश्रेष्ठायनमः ॥ ॐनमःशि०मः वस्त्रंस० ॥ वस्त्राचमनंस० ॥ ॐरुद्रायनमः ॥ ॐनमःशि०मः ॥ उपवीतंस० । ततः ॥भवायदेवायनमः इत्याद्यष्टाभिरष्टौपुष्पाणिदद्यात् ॥ ॐभवायदेवायन

---

टी. करावी. तेपछी पत्र४४मुजब "आपोहिष्ठा०नः ।३। ए त्रण ऋचावडे नवराववा.

१. ते पछी सांग रुद्रीवडे अभिषेक करवो पछी " ॐ भूर्भुवः स्वः " एव्याहृतियोवडे प्रदक्षिणावर्त्तन शिवनी फरतुं जलनुं सेचन करी पवित्रां पादना मूलमां मुकी जलवडे तर्पणकरवुं.

२. एरीते आठमंत्रोवडे दरमंत्रे तर्पण करवुं.

३ ते पछी " भवाय देवाय नमः " इत्यादि आठ शिवना नामो वडे आठ पुष्पो चढाववां.

मः ॥ १ ॥ ॐशर्वायदे०मः ॥ २ ॥ ॐईशानायदे०मः ॥३॥ ॐपशुपतयेदे०मः ॥४॥ ॐरुद्रायदे०मः ॥५॥ ॐउग्रायदे० ॥६॥ ॐभीमायदे० ॥७॥ ॐमहतेदे०॥८॥ ॐकालायनमः ॥ ॐनमःशि०मः ॥ गन्धंस० ॥ ॐकलविकरणायनमः ॥ ॐनमःशि०मः ॥ अक्षतान्स० ॥ ॐबलविकरणायनमः ॥ ॐनमःशि०मः बिल्वपत्राणिचस० । ॐबलायनमः । ॐनमःशि०मः ॥ धूपंस० । ॐबलप्रमथनायनमः । ॐनमःशि०मः ॥ दीपंस० ॥ ॐसर्वभूतदमनायनमः ॥ ॐनमःशि०मः ॥ नैवेद्यंस० ॥ ॐमनोन्मनायनमः ॥ ॐनमःशि०नः ॥ आचमनंस० ॥ ॐशंभवेनमः ॥ ॐनमःशि०मः ॥ ताम्बूलंस० ॥ ॐशंभवेनमः ॥ शि०मः ॥ प्रदक्षिणांस० ॥ ॐशंभवेनमः ॥ ॐनमःशि०मः ॥ नीराजनंस० ॥ शंभवेनमः । ॐनमःशि०मः ॥ नमस्कारान्स० ॥ ततोलिङ्गस्यप्रागादिदिक्षुअप्रादक्षिण्येनवक्ष्यमाणमन्त्रैरक्षतान् क्षिपेत् ॥ ॐभवायक्षितिमूर्तयेनमः ॥ १ ॥ ॐशर्वायजलमूर्तयेनमः ॥ २ ॥ ॐईशानायअग्निमूर्तयेनमः ॥ ३ ॥ ॐप

टी. १ ते पछी लिंगनी फरतां पूर्वथी माडी अग्नि कोण । सुधी आठ दिशामां अप्रदाक्षिणा वर्त्तन ( अवला ) आगलना मंत्रोवडे अक्षत ( यव ) छांटवा.

शुपतयेवायुमूर्त्तयेनमः ॥४॥ ॐरुद्रायआकाशमूर्त्तयेनमः ॥ ५ ॥ ॐउग्रायंयजमानमूर्त्तयेनमः ॥६॥ ॐभीमायसो ममूर्त्तयेनमः ॥ ७ ॥ ॐमहतेसूर्यमूर्त्तयेनमः ॥ ८ ॥ ततः प्रार्थना॥ प० ॐनमोओङ्कारस्वरूपायवेदरूपायतेनमः ॥ अलिङ्गालिङ्गरूपायाविश्वरूपायतेनमः ॥ १ ॥ मोक्षदात्रे नमस्तुभ्यंनमोनादात्मने तथा ॥ नमःशब्दस्वरूपाय रूपातीतायतेनमः ॥ २ ॥ त्वंमातासर्वलोकानांत्वमेवजगतःपिता ॥ त्वंभ्रातात्वंसुहृन्मित्रंत्वंप्रियःप्रियरूपधृक् ॥ ३ ॥ त्वंगुरुस्त्वंगतिःसाक्षीत्वंपितात्वंपितामहः ॥ नमस्तेभगवन्रुद्र!भास्करामिततेजसे ॥ ४ ॥ संसारसागरेमग्नमामुद्धरशिवाव्यय! ॥ अनेनपूजनेनत्वंवाञ्छितार्थप्रदोभव ॥५॥ दण्डवत्प्रणतोभूत्वास्तुत्वाचैवविशेषतः एकाग्रप्रयतोभूत्वामन्त्रमेतदुदीरयेत् ॥ ६ ॥ अङ्गहीनं क्रियाहीनंविधिहीनंमहेश्वर! ॥ पूजितोसिमयादेव!तत्क्षमस्वाम्बिकापते! ॥७॥ अन्यथासकचित्तेनक्रियाहीनेनवाविभो! ॥ मनोवाक्कायदुष्टेनपूजितोसित्रिलोचन! ॥ तत्सर्वंक्षम्यतांदेवदासेकृत्वादयांमयि ॥८॥ * इतिप्रार्थनांकृत्वा रौद्रैर्ऋग्यजुःसामाथर्वभिश्चार्षेयस्तोत्रैस्तुत्वा

टी.१ ते पछी प्रार्थना करवी ते नीचे प्रमाणे. *'
२. ए रीते प्रार्थना करी रुद्र संबंधी. ऋक्. यजु. साम, अने

यथाशक्तिपञ्चाक्षरमन्त्रस्यजपंकुयात् ॥ ॥ २
क्षरमन्त्रस्यवामदेवऋषिः ॥ अनुष्टुपूछन्दः ॥ २
देवता ॥ सदाशिवप्रीत्यर्थेजपेविनियोगः ॥ यथाशक्तिज
प्त्वा ॥ अनेनजपेनशिवःप्रीयतां ॥ ततः ॥ प्रयातुभ
न्महादेवः॥इतिविसर्जनंकृत्वा॥ १
चोमापते!प्रभो! ॥ क्षमस्वदेवदेवेश!मामङ्गीकुरुशङ्कर!॥
इतिमन्त्रमुक्त्वा पूजांसमर्पयेत्।
यत्कृतंतुमयाशिव!॥तत्सर्वंपरमेशान ! मयातुभ्
तं ॥ इतिसमर्प्य ॥ ततः ॥ अयंमेहस्तोभगवानयंमे
वत्तरः ॥ अयमेविश्वभेषजोयंशिवाभिमर्शनः । इतिमन्त्रं
पठित्वासव्यहस्ततलेनलिङ्गंस्पृशेत् ॥ ततः शिवनिर्ण
जनोदकंचुलकमितंवारत्रयंपिबेत् ॥ तत्रमन्त्रः ॥

टी. अथर्व वेदना मंत्रो तेमज ऋषिप्रणीत स्तोत्रोवडे करी यथा शक्ति शिवपंचाक्षर मंत्रनो जप करवो.

१. यथाशक्ति शिवपंचाक्षरजपी "अनेनज॰प्रीयतां" एम जपनिवेदनकरी ते पछी "प्रयातु॰देवः" ए मंत्रे विसर्जनकरी 'आवाहनं॰शंकर' ए मंत्रभणी पूजा अर्पण करवी तेनो मंत्र

२. ए रीते अर्पण करी पछी "अयंमे॰मर्शनः" ए मंत्र भणी. डावाहाथनी हथेली वडे लिंगनो स्पर्श करवो. ते पछी शिवने नवरावेलुं नमण चागलां प्रमाणनुं त्रणवार पीवुं तेनो मंत्र.

मृ. मृत्युहरं पुण्यं ब्रह्महत्याविनाशनम् ॥ व्याधिघ्नं पुण्य दंपास्ये शिवनिर्णेजनोदकं ॥ इतिबौद्धायनोक्तप्रकारेण लिङ्गार्चनचन्द्रिकानुसारी पार्थिवलिङ्गपूजाप्रयोगः अथ स्त्रीणांतुपार्थिवं लिङ्गं सभर्तृणां विशेषतः॥ इतिविश्वेश्वरसंहितायामुक्तत्वात् ॥ सर्ववर्णाश्रमाणां तुकलौ पार्थिवमेहवहि ॥ इति पूर्वोक्तवाक्याच्च स्त्रीशूद्राणामपि पार्थिवपूजा श्रेष्ठातस्मात्सोच्यते ॥

॥ अथ स्त्रीशूद्रयोर्नाममन्त्रेण पूजाप्रयोगः ॥

॥ उदङ्मुखवउपविश्य ॥ शिवायनमः ॥ इतिमन्त्रे

---

टी. एरीते बोद्धायने कहेलाप्रकारे लिंगार्चन चंद्रिकाने अनुसरती पार्थिव लिंगपूजा पुरीथइ.

हवे सभर्तृ ( पतिवाली ) स्त्रीयोने विशेषे करी पार्थिव लिंगनु पूजन करवुं एम विश्वेश्वर संहितामां कहेलुंछे तेथी तथा सर्व वर्णो (ब्राह्मण. क्षत्रिय, वैश्य. अने शूद्र ) ने तथा सर्व आश्रमो ( ब्रह्मचर्य गृहस्थाश्रम. वानप्रस्थ अनेसंन्यस्त ) ने तोकलियुगमां पार्थिव लिंगनुं पूजन श्रेष्ठछे एवा वाक्यथी स्त्री अने शूद्र ने पार्थिव पूजा श्रेष्ठ जणायछे माटे ते कहिये छीये.

॥ हवे स्त्री तथा शूद्रोने नाममंत्रे पूजा करवी ते

उत्तर दिशा सामा मुखे बेशी " शिवायनमः " ए मंत्रे

णश्रोत्रियागारपचनाग्निसंभूतभस्मत्रिपुण्ड्रंतूष्णींरुद्राक्षधारणंचकृत्वाऽऽचम्यदेशकालौसङ्कीर्त्य ॥ श्रीपरमेश्वरप्रीत्यर्थंपार्थिवलिङ्गपूजनमहं करिष्ये ॥ "हरायनमः" ॥ इतिमृदमाहृत्य संशोध्य जलप्रक्षेपेण संपीड्य "महेश्वरायनमः" ॥ इतिलिङ्गंकुर्यात् ॥ "शम्भवेनमः ॥ शिव! इहप्रतिष्ठितोभव" ॥ इतिसाबिल्वपत्रेताम्रपात्रेप्रतिष्ठाप्य ॥ देवस्यप्राणाः ॥ जीवः ॥ सर्वेन्द्रीयाणिइहागत्यसुखंचिरंतिष्ठन्तु ॥ ध्यायेन्नित्यंमहेशंरजतगिरिनिभंचारुचन्द्रावतंसंरत्नाकल्पोज्ज्वलाङ्गंपरशुमृगवराभीतिहस्तंप्रसन्नम् ॥ पद्मासीनंसमन्तात्स्तुतममरगणैर्व्याघ्रकृत्तिंवसानंविश्वाद्यंविश्वबन्द्यंनिखिलभयहरंपञ्चवक्त्रं

---

श्रोत्रीय ( सांगवेदभणनार ) ना घरना पाकना अग्निना भस्मनु त्रिपुंड्र तथा वगर मंत्रे रुद्राक्षनु धारण करी पत्र २० ना टीप्पणमां लख्या मुजब देशकालनु कीर्त्तन ( संकल्प ) करी ' श्रीपरमेश्वर० करिष्ये ' एमसंकल्प करी ' हरायनमः ' एमंत्रे प्रथमबताव्या मुजवनी शुद्ध माटी लावी ते साफ करी जल नाखी तेनो पीडो करी ' महेश्वरायनमः ' एमंत्रे लिंग बनाववु ने ' शंभवेनमः॥ शिवइह० भव ' एमंत्रे बिलीपत्र सहीत त्रांबाना पात्रमां बेसारी ' देवस्य० तिष्ठतं ' एरीते प्राण प्रतिष्ठा करी नीचेना श्लोके ध्यान करवुं.

त्रिनेत्रं॥१॥ इतिध्यात्वा॥ शूलपाणयेनमः॥ श्रीसाम्बसदाशिव! इहागच्छइहप्रतिष्ठइत्यावाहयेत् ॥ शिवायनमः॥ आसनंसमर्पयामि ॥ इतिपुष्पाद्यासनंदेयं ॥ पिनाकधृषेनमः ॥ पाद्यं स०। शिवायनमः ॥ अर्घ्यंस० शिवायनमः ॥ आचमनं स० ॥ शिवायनमः ॥ स्नानं स० ॥ शिवायनमः ॥ आचमनंस० ॥ शिवायनमः ॥ वस्त्रंस० ॥ शिवायनमः॥ आचमनंस० ॥ शिवायनमः ॥ यज्ञोपवीतंस०॥ शिवायनमः ॥ गन्धंस० ॥ शिवायनमः ॥ पुष्पं । विल्वपत्रंस०॥शिवायनमः ॥ धूपंस० शिवायनमः ॥ दीपंस० ॥ शिवायनमः ॥ नैवेद्यंस०॥ शिवायनमः॥आचमनंस०॥ ततोलिङ्गस्यप्रागादिदिक्षुअप्रादक्षिण्येनवक्ष्यमाणमन्त्रैरक्षतान्क्षिपेत् ॥भवायक्षितिमूर्त्तयेनमः ॥ १ ॥ शर्वायजलमूर्त्तयेनमः ॥ २ ॥ ईशानायअग्निमूर्त्तयेनमः ॥ ३ ॥ पशुपतयेवायुमूर्त्तये

टी. १. एरीते ध्यान करी 'शूलपाणयेनमः० । शि०प्रतिष्ठ' एं रीते आवाहन करवुं.

२. पुष्प वीगेरेनुं आसन अर्पण करवुं.

३. ते पछी लिंगनी फरता अप्रदक्षिणा वर्त्तन (अवला) पूर्वथी माडी अग्नि कोणा सुधीनी आठेदिशामां आगलना मंत्रो वडे अक्षत (यव अथवा चोखा) नाखवा.

नमः ॥ ४ ॥ रुद्रायआकाशमूर्त्तयेनमः ॥ ५ ॥ उग्राययजमानमूर्त्तयेनमः ॥ ६ ॥ भीमायसोममूर्त्तयेनमः ॥ ७ ॥ महतेसूर्यमूर्त्तयेनमः ॥ ८ ॥ ततःप्रार्थना ॥ नमोङ्कार०मयि ॥ ९ ॥ इतिस्तुत्वा ॥ पशुपतयेनमः ॥ इतिक्षमाप्ययथाशक्ति ॥ 'शिवायनमः' ॥ इतिमूलमन्त्रं जप्त्वा ॥ अनेनजपेनश्रीशिवःप्रीयतां ॥ इतिनिवेद्य ॥ महादेवायनमः॥इतिविसर्जयेत्॥इतिलिङ्गार्चनचन्द्रिकायांधर्माब्ध्यनुसारीस्त्रीशूद्रयोर्नाममन्त्रेणपूजाप्रयोगः॥ अत्रप्रसङ्गात्किञ्चिदुच्यते॥ पुत्रकामस्तुद्विशतदिनपर्यन्तंप्रत्यहंलिङ्गद्वयंपीतमृत्तिकयाकुर्यात्॥ पञ्चामृतेना

---

टी.१ते पछी प्रार्थना करी तेमज 'नमोंकार०मयि' ॥९॥ एरीतना पत्र १२१ मां लखेला श्लोको वडे स्तुती करी "पशुपतयेनमः" ए मंत्रे क्षमापनकरी शक्तिप्रमाणे "शिवायनमः" ए मूळमंत्र जपी "अनेनज०यतां" ए रीते जपनिवेदनकरी "महादेवायनमः" एमंत्रे विसर्जन करवुं.

ए रीते लिंगार्चन चंद्रिकामां धर्मसिंधुने अनुसरतो स्त्री अने शुद्रने नाम मंत्रे पूजा करवानो प्रयोग पुरो थयो.

आ जगोये प्रसंगो पात्त थोडु कहीये छीये॥ पुत्रनी कामनावाळो२००दीवस सुधी हमेशां पीली माटी वडे बबे लिंगकरे पंचामृत ( दुध दहि घीइ मध अने साकर ) वडे अभिषेक क

भिषेकः ॥ मल्लिकापुष्पाणिगुडोदननैवेद्यं ॥ ॐकांडात्कां डात्प्ररोहंतिपरुषःपरुस्पषरि ॥ एवानोदूर्वेप्रतनुसहस्रे णशतेनच ॥ इतिमन्त्रंशतमष्टाधिकंजप्त्वा ॥ याशतेनप्र तनोषिसहस्रेणविरोहसि ॥ तस्यास्तेदेवीष्टकेविधेमह विषावयं ॥ इति मंत्रेणाष्टोत्तरशतदूर्वाप्रतिमन्त्रंसमर्प येदिति लिङ्गार्चनचन्द्रिकायां रुद्रयामले उक्तम् ॥ अ पुत्रस्य पुत्रकामनायां प्रत्यहं पार्थिवलिङ्गपूजां कृत्वाऽ भिलाषाष्टकजपंसंवत्सरंकुर्यादितिसंस्कारकौस्तुभेधर्मा ब्धौचोक्तं ॥ तथापि यावत्कार्यसिद्धिर्भवेत्तावदनुष्ठानं ॥ प्रतिबन्धकदुरितबाहुल्यस्य क्षये कालनियमाभावात् ॥ तत्रसङ्कल्पेविशेषः ॥ देशकालौसङ्कीर्त्य ॥ ममअनेकज

टी. रवो। मल्लिका ( मोघरा ) नां पुष्पो गोल अने राधेला चोखानुं नैवेद्य करवुं " ॐकांडात्कांडात्प्र०शतेनच " ए मंत्र १०८ वार जपी " याशतेन०वयं " ए मंत्रे १०८ दूर्वा दर मंत्रावृत्तीये चडाववी एम लिंगार्चन चंद्रिकामां रुद्रयामल नामना ग्रंथमां कहेलुछे. ॥ मुदल पुत्र न होय ने तेने पु त्रनी कामना होयतो तेहमेशां पार्थिव लिंगनुं पूजन करी आ गल बताव्या मुजब अभिलाषाष्टकनो वर्ष सुधी पाठ करे एम संस्कार कौस्तुभ तथा धर्मसिंधुमां कह्युछे. तोपण ज्याहां सुधी कार्यनी सिद्धि थाय त्यांहांसुधी अनुष्ठान करवुं. कारण के संतति प्रतिबंधक पापोनुं घणापणुंछे तेथी तेना क्षयमां का

मू.न्मार्जितानपत्यत्वमृतापत्यत्वादिनिदानभूतबालघा तनिक्षेपाहरणविप्ररत्नापहरणादिजन्यदुरितस्यसमूल नाशद्वारादीर्घायुष्मद्बहुपुत्रादिसन्ततिप्राप्तिकामः श्री भवानीशङ्करप्रीत्यर्थंपार्थिवलिङ्गपूजनमभिलाषाऽष्टक जपंचकरिष्ये ॥ इति सङ्कल्प्य पूर्वोक्तविधिना पार्थिव पूजांकृत्वाऽभिलाषाष्टकंजपेदिति ॥ प्रत्यहंलिङ्गद्वयपू जनेप्राणप्रतिष्ठाप्टथक् ॥ आवाहने ॥ ॐभूःपुरुषावावा हयाम्यौंभुवः पुरुषावावाहयाम्यौंसुवःपुरुषावावाहया म्यौंभूर्भुवःसुवःपुरुषावावाहयम्यायातांभगवन्तौमहादे वौ ॥इत्यावाहनेशेषं ॥ शिवाभ्यांनमः॥ इत्यादिद्वि वनान्तो हनेतिविशेषः ॥

॥ अथाऽभिलाषाऽष्टकप्रारम्भः॥

श्रीगणेशाय नमः ॥ विश्वानरउवाच ॥ प० ।एकं ब्रह्मै

---

ळना नियमनो अभावछे.॥हवे ते पूजाना संकल्पमां पत्र २० मुजब देश कालनु कीर्त्तन ( संकल्प ) करी " ममअनेक ० करीष्ये" ए रीते संकल्प करी प्रथम कहेला विधिवडे पार्थिवपूजा करी अभिलाषाष्टकनो जप करवो. हमेशां बे लिंगना पूजनमां प्राण प्रतिष्ठा जुदी करवी. ने आवाहनमां " ॐभूःपुरुषावा वा० माहादेवौ " ए रीते ने बाकी " शिवाभ्यांनमः " एम द्विवचनांत उपचारे पूजन करवु एटलो विशेषछे बाकी शरखुंछे.

मू. वाद्वितीयंसमस्तंसत्यंसत्यंनहेनानास्तिकिञ्चित्॥ए
कोरुद्रोनद्वितीयोवतस्थेतस्मादेकंत्वांप्रपद्येमहेशं ॥१॥
एकःकर्तात्वंहिविश्वस्यशंभोनानारूपेष्वेकरूपोप्यरूपः
॥ यद्वत्प्रत्यप्स्वर्कएकोप्यनेकस्तस्मान्नान्यंत्वांविनेशंप्र
पद्ये ॥ २ ॥ रज्जौसर्पःशुक्तिकायांचरौप्यंनैरःपूरस्त
न्मृगाख्येमरीचौ॥यद्वत्तद्वाद्विष्वगेषप्रपञ्चोयस्मिञ्ज्ञाते
तंप्रपद्येमहेशं ॥ ३ ॥ तोयेशैत्यंदाहकत्वंचवन्हौतापोभा
नौशीतभानौप्रसादः ॥ पुष्पेगन्धोदुग्धमध्येचसर्पिर्यत्त
च्छंभो!त्वंततस्त्वांप्रपद्ये॥४॥ शब्दंगृह्णास्यश्रवास्त्वंहि
जिघ्रेरघ्राणस्त्वंव्यङ्घ्रिरायासिदूरात् ॥ व्यक्षःपश्येस्त्वंर
सज्ञोप्यजिह्वःकस्त्वांसम्यग्वेत्त्यतस्त्वांप्रपद्ये॥५॥नोवे
दस्त्वामीशसाक्षाद्धिवेदनोवाविष्णुर्नोविधाताऽखिलस्य
॥नोयोगीन्द्रानेन्द्रमुख्याश्चदेवा भक्तोवेद त्वामतस्त्वांप्र
पद्ये ॥ ६ ॥ नोतेगोत्रंनापिजन्मापिनाख्यानोवारूपं
नैवशीलंनदेशः ॥ इत्थंभूतोपीश्वरस्त्वंत्रिलोक्याःसर्वा
न्कामान्पूरयेस्तद्भजेत्वां॥७॥त्वत्तःसर्वंत्वंहिसर्वंस्मरारे!
त्वंगौरीशस्त्वंचनग्नोऽतिशान्तः॥त्वंवैवृद्धस्त्वंयुवात्वंच
बालस्तात्किंयत्त्वंनास्त्यतस्त्वांनतोस्मि॥८॥ स्तुत्वेति
भूमौनिपपातविप्रःसदण्डवद्यावदतीवहृष्टः ॥ तावत्स

बालोखिलवृद्धवृद्धःप्रोवाचभूदेव!वरंवृणीहि॥९ ॥ तत
उत्थायहृष्टात्मामुनिर्विश्वानरःकृती॥प्रत्यब्रवीत्किमज्ञा
तंसर्वज्ञस्यतवप्रभो ! ॥ १० ॥ सर्वान्तरात्माभगवाञ्शर्वः
सर्वप्रदोभवान् ॥ याञ्चांप्रतिनियुङ्क्तेमांकिमीशोदैन्य
कारिणीम् ॥ ११ ॥ इतिश्रुत्वावचस्तस्यदेवोविश्वानर
स्यह ॥ शुचेःशुचिव्रतस्याथशुचिस्मित्वाब्रवीच्छिशुः ॥
॥ १२ ॥ बालउवाच ॥ त्वयाशुचेशुचिष्मत्यांयोभिला
षःकृतोहृदि ॥ अचिरेणैवकालेनसभविष्यत्यसंशयः
॥ १३ तवपुत्रत्वमेष्यामिशुचिष्मत्यांमहामते !॥ ख्या
तोगृहपतिर्नाम्नाशुचिःसर्वामरप्रियः ॥ १४॥ अभिला
षाष्टकंपुण्यंस्तोत्रमेतत्त्वयेरितम् ॥ अब्दंत्रिकालपठना
त्कामदंशिवसन्निधौ ॥ १५ ॥ एतत्स्तोत्रस्यपठनंपुत्र
पौत्रधनप्रदं॥ सर्वशान्तिकरंवापिसर्वापत्परिनाशनम् ॥
॥ १६ ॥ स्वर्गापवर्गसंपत्तिकारकंनात्रसंशयः ॥ प्रात
रुत्थायसुस्नातोलिङ्गमभ्यर्च्यशाम्भवं ॥१७॥ वर्षंजप
न्निदंस्तोत्रमपुत्रःपुत्रवान्भवेत् ॥ वैशाखेकार्तिकेमाघे
विशेषनियमैर्युतः ॥ १८ ॥ यःपठेत्स्नानसमयेलभतेस
कलंफलं ॥ कार्तिकस्यतुमासस्यप्रसादादहमव्ययः ॥
॥ १९ ॥तवपुत्रत्वमेष्यामियस्त्वन्यस्तत्पाठिष्यति ॥

अभिलाषाष्टकमिदंनदेयंयस्यकस्यचित् ॥ २० ॥ गोपनीयंप्रयत्नेनमहावन्ध्याप्रसूतिकृत् ॥ स्त्रियावापुरुषेणापिनियमाल्लिङ्गसन्निधौ ॥ २१ ॥ अब्दंजप्तमिदंस्तोत्रंपुत्रदंनात्रसंशयः ॥ इत्युक्त्वान्तर्दधेबालःसोपिविप्रोगृहंगतः ॥ २२ ॥ इतिश्रीस्कन्दपुराणे काशीखण्डे विश्वेश्वरस्तोत्रं संपूर्णं ॥

॥ अथ केवलविष्णुपूजनेच्छुं प्रतिविष्णुपूजाप्रयोगः ॥ तत्र सङ्कल्पे * श्रीविष्णुप्रीतये श्रीविष्णोःपुजांकरिष्ये ॥ कलशे तीर्थावाहनादिन्यासान्तं कृत्वा पूजयेत् ॥ * ॐसहस्रशीर्षाः०गुलं ॥ श्रीमहाविष्णवेनमः ॥ मन्त्रपुष्पं समर्पयामि ॥ १ ॥ ॐपुरुषएवेदं०हंति ॥ श्रीम०नमआसनंस०मि ॥ २ ॥ ॐएतावानस्य०दिवि श्रीम०नमः ॥ पाद्यंस०मि ॥ ३ ॥ ॐत्रिपादूर्द्ध०अभि ॥ श्रीम०नमः ॥ अर्घ्यंस०मि ॥ ४ ॥ ॐतस्माद्विराळ०पुरः ॥ श्रीम०नमः ॥ आचमनीयंस०मि ॥ ५ ॥ ॐयत्पुरुषेण०हविः ॥ श्रीम०नमः ॥ स्नानंस०मि ॥ ६ ॥

---

१ हवे एकला विष्णुपूजानो प्रयोग कहेछे. ॥

टी. १. तेमां संकल्पमां विशेष आरीते *

कलशमां तीर्थना आवाहनथी न्यास सुधी पत्र ८७थी ९० सुधीमां लख्या मुजब करीने पूजा करवी ते. *

श्रीम०नमः॥ पुनराचमनीयंस०मि ॥ ॐतंयज्ञं०श्रये ॥ श्रीम०नमः ॥ वस्त्रंस०मि॥ ७ ॥ श्रीमहा०नमः॥ आचमनीयंस०मि॥ॐतस्माद्यज्ञात्सर्वहुतःसंभृतं०श्रये ॥ श्रीमहा०नमः॥ यज्ञोपवीतंस०मि ॥ ८ ॥ श्रीम० नमः ॥ आचमनीयंस०मि ॥ ॐतस्माद्यज्ञात्सर्वहुतऋचः०र्यत ॥श्रीम०नमोगन्धंस०मि ॥९॥ ॐतस्मादश्वा०वयः ॥ श्रीम०नमः ॥ पुष्पाणिस०मि ॥१०॥ ॐयत्पुरुषंव्यदधुः०च्यते॥श्रीम०नमः।धूपंस०मि॥११॥ ॐब्राह्मणोस्य०यत ॥ श्रीम०नमोदीपंस०मि ॥१२॥ ॐचंद्रमामनसो०यत ॥ श्रीम०नमः ॥ नैवेद्यंस०मि ॥ १३ ॥ श्रीम०नमः ॥आचमनीयंस०मि ॥ ततोवैदिकमन्त्रेणनीराजनं ॥ * ॐयेदेवासोदिव्येकादशस्थ पृथिव्यामध्येकादशस्थ ॥ अप्सुक्षितोमहिनैकादशस्थ तेदेवासोयज्ञमिमंजुषध्वं ॥१॥ श्रीम०नमः । नीराजनंस०मि ॥ ॐनाभ्याआसी०यन् ॥ श्रीम०नमः ॥ नमस्कारंस०मि ॥ १४ ॥ ॐसप्तास्यासन्०पशुं०श्रीम०नमः ॥ प्रदक्षिणांस०मि ॥ १५ ॥ यज्ञेनयज्ञ०देवाः ॥ श्रीम०नमः॥ पुष्पाञ्जलिंस०मि ॥ १६ ॥ अनेनपूज

टी.१ ते पछी वेदना मंत्र वडे नीराजन (आरती) करवुं. *

मू. नेनश्रीमहाविष्णुःप्रीयतांनमम ॥ इतिकेवलविष्णु पूजनकर्तृप्रतिविष्णुपूजाप्रयोगः ॥ इत्यष्टधाविभक्तस्य दिवसस्यप्रथमभागकृत्यं ॥ १ ॥ द्वितीयभागेवेदाभ्यासः ॥ २ ॥ तृतीयभागेपोष्यवर्गसाधनं ॥ ३ ॥ अथचतुर्थभागकृत्यं

॥ तत्रनित्यस्नानाविधिप्रयोगः ॥

केचिदत्राऽन्धपरंपरयाचतुर्दशीपरिशिष्टोक्तस्नानविधिंकुर्वन्तितदसत् । यतःप्रयोगदीपेतत्परिशिष्टस्याऽनार्षकत्वंसविस्तरेणप्रतिपाद्ययः प्रयोगोलिखितःसोऽत्रलिख्यते ॥ कर्त्ताउपयुक्तोपकरणानि

---

टी. १. एरीते केवल विष्णुपूजानी इछवाला ने विष्णुपूजानो प्रयोग समाप्त थयो ॥ एरीते आठ प्रकारे विभाग करेला दीवसना प्रथम भागनुं कृत्य पुरु थयु ॥ १ ॥ बीजा भागमां वेदाभ्यास करवो ॥ २ ॥ त्रीजा भागमां कुटुंबवर्गना पोषणनुं साधन करवुं. ३ ॥ हवे चोथा भागनुं कृत्य कहेछे.

॥ तेमां प्रथम नित्यस्नान विधिनो प्रयोग कहीये छैये ॥

॥ केटलाएक आ जगोये अंध परंपराये चतुर्दशी परिशिष्टमांकहेली स्नान विधि करेछे ते ठीक नथी. कारण के प्रयोग दीपमां दयाशंकरे ते परिशिष्टनुं सविस्तर अनार्षक पणुं प्रतिपादन करी जे प्रयोग कहेलो छे ते आठेकाणे लखीये छीये. कर्त्ता

गृहीत्वा नद्यादौ गत्वा रहसि तटं प्रक्षाल्य संभारां स्तत्रसंस्थाप्य तीर्थदेवतां नमस्कृत्य विधिवदाचम्या ञ्जलिं कृत्वा विष्णुं संस्मृत्य शनैर्मदा कण्ठादनुत्तारित मुपवीतं संशोध्य गायत्र्या शिखां बध्वा मुसलवन्निम ज्जेत् ॥ततः॥अतितीक्ष्णमहाकाय कल्पान्तदहनोपम॥ भैरवायनमस्तुभ्यमनुज्ञांदातुमर्हसि ॥ इतिभैरवं संप्रा र्थ्य ॥ तत्त्वायामीत्याजिगर्तिःशुनःशेपःकृत्रिमोविश्वा मित्रोदेवरातोवरुणस्त्रिष्टुप् ॥ अर्घ्यदाने विनियोगः ॥ ॐतत्त्वायामिब्रह्मणावंदमानस्तदाशास्तेयजमानोहवि र्भिः ॥ अहेळमानोवरुणेहबोध्युरुशंसमानआयुःप्रमो षीः ॥ १ ॥ वरुणएतत्तेऽर्घ्यंनमः ॥ इति वरुणायार्घ्यं

---

टी. नाहावाना उपयोगी पदार्थो ( गायनु छाण, दूर्वा, अघेडो, तल, वीगेरे) लइ नदी वीगेरे ए जइ एकांत स्थले कांठो धोइ, उपरनां दर्भ वीगेरे त्यां मुकी, पाणीनी बाहार माटी वडे हाथ पग धोइ, बे हाथमां दर्भ राखी, तीर्थ देवताने नमस्कारकरी वीधीथी आचमनलइ हाथ जोडी विष्णुंनुं स्म रण करी धीमे धीमे माटी वडे कंठमांथी काहाडयाविना जनो इ साफ करी गायत्री वडे शिखा बांधी ने नाहावुं ते पछी " अतितीक्षणम० र्हसि " ॥ ए श्लोक वडे भैरवनी प्रार्थना करी ॥ ॐतत्त्वायामि० नमः ॥ एरीते वरुण ने अर्घ्य आपवुं॥

दद्यात् ॥ ततोगङ्गाया अर्घ्यंदद्यात् ॥ गङ्गा गङ्गेतियो ब्रूयाद्योजननां शतैरपि ॥ मुच्यते सर्वपापेभ्योविष्णुलोकं स गच्छति ॥ श्रीगङ्गे ! एतत्तेऽर्घ्यंनमः ॥ इतिगङ्गाया अर्घ्यंदद्यात् * ॥ १ ॥ गङ्गाद्वारे प्रयागेच गङ्गासागरसङ्गमे॥ सर्वत्र दुर्लभा गङ्गा त्रिस्थानेषु विशेषतः श्रीगङ्गेएतत्ते०मः ॥२॥ किरणा धूतपापा च पुण्यतोया सरस्वती ॥ गङ्गा च यमुना चैव पञ्चनद्यः पुनन्तु मां॥ श्रीपञ्चगङ्गाएतद्वोऽर्घ्यंनमः॥ इति पञ्चगङ्गाभ्योऽर्घ्यंदद्यात् ॥३॥ विष्णुपादाब्जसंभूते!गङ्गे त्रिपथगामिनि! ॥ धर्मद्रवेतिविख्याता पापं मे हरजान्हवि! ॥ श्रीगङ्गेए०मः ॥ ४ ॥ जान्हवी सर्वतः पुण्या ब्रह्महत्यापहारिणी॥वाराणस्यां विशेषेण गङ्गाचोत्तरवाहिनी ॥ श्रीगङ्गेए०॥ ५ ॥ षष्ठिकोटिसहस्राणि षष्ठिकोटिशतानिच ॥ सदा वसन्ति ते तीरे मध्यान्हे मणिकर्णिके!॥ श्रीमणिकर्णिकेए० ॥ ६ ॥ काशिकातिरिक्तगङ्गायांकिरणेतिषष्ठिकोटीत्यर्घदानेनभवतः ॥ अन्यतीर्थे तत्तत्तीर्थदेवता

---

टी. ते पछी गंगागंगेति० नमः॥ ए मंत्रे गंगाने अर्घ आपवो.* १. काशी शीवायनी गंगामां "कीरणा०तुमां ॥३॥" एतथा 'षष्ठिकोटि०र्णिके ॥ ६ ॥' ए बे श्लोक वडे अर्घदान न करवा बीजा तीर्थमां ते ते तीर्थना देवने अर्घ्य आपवुं बीजा देवने

मू. यै अर्घ्यंदेयंनान्यस्यै॥तीर्थेन्तोर्थातरंनस्मरेदितिस्मृतेः ॥ तत्रापिगङ्गांतुस्मरेदेव ॥ स्नानकाले ऽन्यतीर्थेषु जप्यतेजान्हवी जनैः॥ विनाविष्णुपदीं क्वान्यत्समर्थम घशोधने ॥ इतिस्कान्दात् ॥ तडागादौ सर्वाणि तीर्थान्यावाह्यार्घ्यं दद्यात् ॥ * ॥ पुष्कराद्यानि तीर्थानि गङ्गाद्याः सरितस्तथा॥ आगच्छन्तु पवित्राणि स्नानकाले सदा मम ॥ १ ॥ गङ्गागंगेतियो० ॥ २ ॥ गङ्गाद्वारेप्र० ॥ ३ ॥ किरणाधूत० ॥ ४ ॥ विष्णुपादाब्ज० ॥ ५ ॥ जान्हवोस० ॥ ६ ॥ षष्टिकोटिस० ॥ ७ ॥ गङ्गाद्वारे कुशावर्ते बिल्वके नीलपर्वते ॥ स्नात्वा कनखले तीर्थे पुनर्जन्म न विद्यते ॥ श्री गङ्गै० ॥ ८॥ आदित्यदुहितर्देवि! यमज्येष्ठेऽतिपाविनि! ॥त्रैलोक्यवन्दिते! वेणि! पापं मे यमुने! हर ॥ श्रीयमुनेए० ॥ ९ ॥ सरस्वति! नमम्तुभ्यं पवित्रे! पापनाशिनि! ॥हर त्वंपातकं

टी. न आपवुं कारण के एक तीर्थमां बीजा तीर्थनुं स्मरण न करवुं एम स्मतिनुं वाक्य छे. माटे ते तीर्थोमां गंगानुं तो स्मरण करवुंज स्नान वखत बीजा तीर्थोमां मनुष्यो ए गंगानु स्मरण थाय कारण के ते गंगा शीवाय पाप धोवामां बीजुं कोइ तीर्थ क्याही पण समर्थ नथी. एम स्कंदनु वाक्य छे अने तळाव वीगेमां सर्व तीर्थोनुं आवाहन करी अर्घ्य आपवुं *

देवि! यन्मया पूर्वसञ्चितं ॥ श्रीसरस्वतिए० ॥ १० ॥ ब्रह्मकमण्डलुसंभूते सोमकान्तिसमप्रभे! ॥ त्रैलोक्यवन्दिते! मातर्हरपापं सरस्वति! ॥श्रीसरस्वतिए० ॥११॥ प्राचीनं पावितं कर्म मेरुतुल्यं चभारत!॥सिध्यन्ति सर्वकार्याणि प्राचीस्नानं यदाभवेत् ॥ श्रीप्राचीसरस्वतिए० ॥ १२॥ असीवरुणयोर्मध्ये पञ्चक्रोशीमहत्फलं ॥ अमराम्रत्युमिच्छन्ति का कथा इतरेजनाः॥ श्रीपञ्चक्रोशि ए० ॥१३॥ गङ्गायमुनयोर्मध्ये यत्रगुप्तासरस्वती ॥ त्रैलोक्यवन्दिते! वेणि! गृहाणार्घ्यं नमोस्तुते ॥ श्रीत्रिवेणिए०॥१४॥विराञ्चितनया प्राचीह्युदीची विष्णुपादजा॥ प्रतीची यमुना यत्र मुक्तिस्तत्र न संशयः॥ श्रीत्रिवेणिए०॥१५॥ ओङ्कारे च भृगुक्षेत्रे तथारेवौरसङ्गमे ॥ सर्वत्र दुर्लभा रेवा त्रिस्थानेषु विशेषतः ॥ श्रीनर्मदेए० ॥ १६ ॥ प्रभाते वहते गङ्गा मध्यान्हे च सरस्वती ॥ अपराह्णे सर्वतीर्थानि रात्रौ वहति नर्मदा ॥श्रीनर्मदेए०॥१६॥ गोमती गोमयस्नानं गोदानं गोपिचन्दनं ॥ दर्शनं गोपीनाथस्य गकाराःपञ्चदुर्लभाः॥श्रीगोमतिए०॥१८॥ ब्रह्मज्ञानेन मुच्यन्ते प्रयागमरणेनवा ॥ अथवा स्नानमात्रेण गोमत्यां कृष्णसन्निधौ ॥ श्रीगोम

तिए०॥१९॥प्रयागे वपनंकुर्यान्मरणंजान्हवीतटे॥दानं दद्यात्कुरुक्षेत्रे तत्त्रयं गोमतीतटे॥श्रीगोमतीए०॥२०॥ गङ्गाच वैष्णवीमूर्त्तिर्ब्रह्ममूर्तिःसरस्वती ॥ रेवाचशाङ्करी मूर्तिस्तिस्त्रोनद्यः पुनन्तुमां॥ श्रीत्रिवेणि ए०॥२१॥ [१]एतदशक्तौ गङ्गाया एव द्वादश नामानि स्मरेत् ॥ तथाच स्कान्देगङ्गावाक्यं ॥"नन्दिनी १नलिनी २ सीता ३ मालती ४ चमहापगा ५॥विष्णुपादाब्जसंभूता ६ गङ्गा ७ त्रिपथगामनी ८ ॥ १ ॥ भागीरथी९ भोगवती १० जान्हवी ११ त्रिदशेश्वरी १२ ॥द्वादशैतानि नामानि यत्र यत्र जलाशये ॥ २ ॥ स्नानोद्यतः पठेन्नित्यं तत्र तत्र वसाम्यहं"॥ इति [२]अनुत्सृष्टतडागादौ तस्मात्पञ्च मृत्पिण्डानुध्दृत्यस्नायात् ॥ततोमृत्खननम्॥ अगस्त्यइत्यनुक्तगोत्रोंऽन्तेवासीब्रह्मचारीरितिस्त्रिष्टुप्॥ मृत्खनने विनियोगः ॥ ॐअगस्त्यःखनमानःखनित्रैः प्रजामपत्यंबलमिच्छमानः ॥ उभौवर्णा

---

१. एटला श्लोको भणवानी अशक्ति होयतो गंगानां बार नामोनुं स्मरण करवुं ते प्रमाणे स्कंपुराणमां गंगानुं वाक्यछे.

२. जलोत्सर्ग कर्यावगरना तलाव, वीगेरेमां तेमांथी माटीना पांच पिंडो. बाहार काहाडीने नाहावुं ते पछी माटीखोदवी

